11

# संस्कृतामृतम्

वर्षः पञ्चदशः अंकः अष्टमः

स्वीकृतम्—शिक्षा निदेशालयेन दिल्ली प्रशासनस्य शिक्षालयानां पुस्तकालयानां च कृते
द्वारा पत्र सं. 5/1/84 पा० पु० 2581-3881—दिनांक 4.8.84

## स्वाधीनं भारतं विजयते

## विषय-क्रमः



शाकाब्द 1914
वैक्रमाब्द 2049 भाद्रपद मासस्य
सन् 1992 अगस्त मासस्य

प्रधान-सम्पादक :
प्रभाकर रामरत्न शास्त्री
साहित्याचार्य, एम. ए.
1418, बाजार गुलियान, दिल्ली-110006
दूरभाष : 3264886

आजीवन—शुल्कम् 251) रूप्यकाणि वार्षिकं शुल्कम् 2) रूप्यकाणि

# सम्पादकीयम्

—रामरत्न शास्त्री

## 1. स्वाधीनता दिवसः—

इह वर्षेऽपि वयं "स्वाधीनता-दिवसम्" अभिनन्दामः। नैकेषां राष्ट्रभक्तानां बलिदानेन समधिगतोऽयं "स्वाधीनता-दिवसः अभिनन्दनीय एव प्रणम्याः च ते आत्मबलिदानिनः राष्ट्र भक्ताः येषां तपस्या-फलोपभोगं वयं कुर्मः।

तथापि विचारयामः स्वाधीनता उच्छृण्खलतयोः अन्तर-विषये। स्वाधीनतायां जनः 'आत्मवशम्' आचरति उच्छृंखलतायां चापि जनः "निरङ्कुशम्" आचरति। एतयोः द्वयोः विषये जनः "स्वतन्त्रम्' आचरति परं आत्मबलिदानिनां राष्ट्रभक्तानां उद्देश्यम् तदानीं किम् आसीत्?

स्वाधीनता-प्राप्तेः अनन्तरं गत सार्धचतुर्षु दशकेषु भारतीयैः कीदृशम् आचरितम्? किं तत् स्वाधीनतायाः सहजं फलम् विद्यते?

पराधीनताकालीनो जनः स्व जीवितं जुगुप्सते। कदाचित् विचारयति 'अधन्यम् आत्मानम्' यद्यापि सः जीवति। निरंकुशता, बुभुक्षया मरणम्, क्षुधार्तस्य स्वशिशोः हननं, पयोमुखभिः कन्याभिः बलात्कारः मादकद्रव्यानां सेवनाधिक्यम्, वृद्धानां अवमानना, शिक्षायाः दुष्परिणामाः देशद्रोहः, संस्कृतेः विघातः, धर्माचरणं हीनता, विश्वासघातः, श्रियः अपव्ययः, संग्रहलालसा, परवञ्चनम् अपमिश्रणं दुश्चरित्रता वृद्धिः, आतङ्कवादः शिक्षायाः न्यायस्य चिकित्सायाः च दुर्लभता महार्घता चापि कम् कम् स्वाभिमानिनं न पीडयति? किम् एतत् सर्वं पंचाशत् वर्षाणां पूर्वं अपि तथैव आसीत्? यथा अद्य विद्यते? किम् एतत् सर्वं अधिगन्तुम् एव राष्ट्र भक्तैः तपः आचरितम् आसीत्? नो चेत् कथम् इदम् प्रसृतम्? अस्य पीडाजनकस्य वातावरणस्य कृते कः दोषभाक् वर्तते? कस्य दोषेण अयं कुमार्गः दर्शितः? कः च अस्य निराकरणं करिष्यति? कः करिष्यति उक्तानां दुष्प्रवृत्तीनां अवरोधम्? विचारणीम् एतद् पौनः पुन्येन पीडितैः उत्पीडितैः चापि सम्मिलय, निरसनोपायाः च करणीयाः स्वाधीनता दिवसे। सुप्रवृत्तीनां प्रसरेण एव वस्तुतः अभिनन्दनीयताम् अधिगमिष्यति अस्मत्-स्वाधीनता-दिवसः॥

## 2. नवमः राष्ट्रपतिः—

गौरवास्पदम् एतत् यत् लोक तन्त्रात्मके अस्मद् भारते संविधानानुसारं निर्वाचनादिकं यथा कालं सम्पाद्यते शान्ति पूर्वकं च सर्वं सम्पद्यते।

सद्यः सम्पन्नस्य नवमस्य राष्ट्रपतेः निर्वाचनम् अपि गौरवास्पदम् हर्षं प्रदायकम् च यद् एतेन देशस्य प्रथमो नागरिकः श्री शंकरदयाल शर्मा निर्वाचितः सञ्जातः। श्री शर्मा महोदयः स्वतन्त्रता सेनानी प्रामाणिको राष्ट्रनायकः, चिरानुभवी प्रशासकः कुशलः राजनेता, प्रकाण्डो विद्वान् समर्पितो देश देश सेवकः वर्तते। स एष राष्ट्रस्य उपराष्ट्रपतिः सन् स्वकीयां यां निष्पक्ष पातिनीं नीतिं योग्यतां च प्रमाणित वान् तेन वयम् आशास्महे यद् महा महिमं शालिनि राष्ट्रपति पदे विराजमानः अपि अयं महोदयः राष्ट्रं समुत्थानं प्रति नेष्यति प्रस्तुतानां राष्ट्र समस्यानां समाधानं कुर्वन् असौ "शर्मा" राष्ट्र-शर्मणे सेत्स्यति। एतेन महा महिमशालिना नवमेन राष्ट्रपतिना स्वकीये प्रथम वक्तव्ये याः याः भावनाः प्रकटिताः नूनं ताः देश हित कारिण्यः सुमार्ग-दर्शिन्यः च सन्ति। अतीवोत्तमम् आदर्शं च अभविष्यत् यदि राष्ट्रपतिपदात् प्रसारितं प्रथमंवक्तव्यम् भारतीय भाषा माध्मेन अभविष्यत् तद् देशात्म सम्मान् सूचकं भारत-भाषागौरव वर्धकम् अभाविष्यत् तथापि वयम् परमादरेण देशस्य नव निर्वाचितं महा महिम शालिनं राष्ट्रपति महोदयं विनम्रतया समभिनन्दामः॥

शिवमस्तु॥

## श्री लक्ष्मी-स्तुतिः

आचार्यः शिवदत्त पाण्डेयः—
श्री आनन्द संस्कृत महाविद्यालयः बेला, मवई,
फतेहपुरम्।

प्रफुल्लनेत्रां विकचस्मितास्याम्।
रत्नोज्ज्वलाङ्गीं नवपद्मगन्धाम्।
कार्तस्वराभां द्विभुजामनिन्द्याम्।
लक्ष्मीं भजे पद्मनिभाननां ताम् ॥१॥

चन्द्रांशुभिस्तुल्यपवित्रहासैः।
अर्कांशुभिस्तुल्यविभा-विलासैः।
आशावितानं परिपूरयन्तीम्।
नमामि लक्ष्मीं छविसारभूताम् ॥२॥

कर्णे प्रभामण्डितकर्णपूरम्।
सन्धारयन्तीं स्वभुजालताभ्याम्।
इन्दीवरं श्रीफलमुत्तमं च।
मनोऽभिरामां प्रणमामि रामाम् ॥३॥

देवासुरैर्वारिधि-मन्थनाच्च।
जाता समं सन्धव-रत्न-जालैः।
पीयूष कुम्भं प्रथमं दधार।
बभूव पश्चात् किल विष्णु पत्नी ॥४॥

वदामि नामानि बहूनि तस्याः।
हरिप्रिया सागर कन्यकाऽसौ।
श्रीः माधवी निर्भरलोकमाता।
पद्मा, क्षमा, भूः कमला च लक्ष्मीः ॥५॥

पद्मावती पद्मवनालया सा।
क्षीरोदकन्या कमलालया च।
पद्मासनस्था कमलात्मिकाऽपि।
रामेन्दिरा सैव रमाभिरामा ॥६॥

सा पद्महस्ता खलु चंचला मा।
सा भार्गवी अद्भुतविष्णुशक्तिः।
एतानि नामानि शुभानि यस्याः।
तां चारुशीलां प्रणमामि रामाम् ॥७॥

क्वचिद्गजेन्द्रै रभिषिच्यमाना।
क्वचित् सुरेन्द्रैश्च समर्च्यमाना।
गन्धर्व-रक्षो-नर--नाग-यक्ष—
देवासुरैः पूजितपादपद्मा ॥८॥

राजेन्द्रवर्गैश्च दिशाधिपैर्या।
लोकत्रये वन्दितनामरूपा।
अभ्यर्थिताऽर्थाकुल लोकवृन्दैः।
लोकाश्रयां तां मनसाश्रयामि ॥९॥

सर्वे पदार्थाः भुवनस्यभोग्याः।
यस्याः कृपादृष्टि फलानि सन्ति।
क्षुद्रा नरा ये भवकूप मग्नाः।
तेषां कृते या पृथुरज्जुरूपा ॥१०॥

यस्याः कृपापूर्ण-विलोकनेन।
भवन्ति दीनाः खलु भूमिपालाः।
व्यतिक्रमं यान्ति च रोषदृष्ट्या।
नमोऽस्तु तस्यै अविचिन्त्य कृत्यै ॥११॥

आराधिता भाग्यविधायिनी सा।
दारिद्र्यहर्त्री धन-धान्य-कर्त्री।
लोके सदाकल्पलतेव देवी।
किं किं न कार्यं प्रकरोति लक्ष्मीः ॥१२॥

ज्ञानं तिरस्कृत्य ददाति वृत्तम्।
कारागृहाच्चापि करोति मुक्तिम्।
असम्भवं कर्म करोति सत्यम्।
किं किं न कार्यं प्रकरोति लक्ष्मीः ॥१३॥

यस्यास्ति लक्ष्मीः स नरः प्रधानः।
स एव मान्यो गुणवान् बुधश्च।
स एव राजा मुकुटं विनैव।
सर्वे नतास्तस्य पदारविन्दे ॥१४॥

न तस्य दोषानवलोकयन्ति।
जनः सदा तं परिपूजयन्ति।
यदाश्रिताः सर्वगुणा भवन्ति।
तस्यै च लक्ष्म्यै सततं नतोऽस्मि ॥१५॥

कर्त्तुं सखे ! वाञ्छसि लोक-लीलाम्।
मनोरथं सर्वविधं विधातुम्।
सदा भज त्वं शुभलक्ष्मयुक्ताम्।
किं किं न कार्यं प्रकरोति लक्ष्मीः ॥१६॥

त्वं देवि ! व्याप्ताऽखिलवस्तुवर्गे।
सर्वे पदार्थास्तव लक्ष्मि ! भेदाः।
त्वयैव साध्यं जगतोऽस्य कार्यम्।
नमामि पादं तव सर्वरूपे ॥१७॥ इति

# भारतीयं गणतन्त्रम्

'ॐ नमः सभाभ्यः सभापतिभ्यश्च वो नमः' इति रुद्राध्यायीवचनेन प्राचीना आर्याः सभां सभापतिं च परमात्मनः स्वरूपमिति स्वीकृत्य नमः कुर्वन्ति सम्मानयन्ति पूजयन्ति च। वेदकाले 'जन' इति नाम्ना एका शासकसंस्था श्रूयते। तत्र केवलं न आर्याः, अनार्या अपि जनसंस्था आसन्। आर्येषु पुरुयदु-द्रुह्यु-भारत-गन्धारादयः, आर्येतरेषु दक्षु-शिग्रु-शिष्यु-कीकटादयो जनाः शासनसञ्चालकाः जाताः। जानन्त्येव वेदविदो अथर्ववेदे एकैव 'विराट्' नाम्नी शासनव्यवस्था आसीत्, यत्र कश्चित् राजा नैवाभवत्। तदानीं सर्वथैव वैराज्यमासीत्। वेदकाले शासनसञ्चालनार्थं सभा समितिश्चेति द्वे संस्थे दृश्येते। 'सभा' इदानीन्तन-ग्रामपञ्चायत सदृशी समितिश्च इदानीन्तन-न्यायपञ्चायतसदृशीति सम्भाव्यते। सभासदस्यानामभिलापः सभ्य इति सभेय इतिशब्देन वा क्रियते, समितिसदस्यानां तु समित्य इत्यभिधानम्। पूर्वोक्तसभासमित्योः नियन्त्रणार्थं ततोऽप्युत्कृष्टा ताभ्यां निर्वाचितानां सदस्यानाम् एका विधायिका संस्था आसीत्, यस्याः नाम 'आमन्त्रण' इति, तत्सदस्यानां नाम 'आमन्त्रणेय' इति श्रूयते। न केवलं तदानीं सभासमितिद्वारा शासनव्यवस्था परिचालिता दृश्यते, अपि तु राज्ञां वरणमपि प्रजामतेनैवेति गम्यते। विशः जनाः राजानं राज्याय वृणवन्ति इत्यर्थः 'त्वां विशो वृणतां राज्याय' इति अथर्ववेदश्रुत्या परिचीयते। भद्रजनैः राजनिर्मातृभिः "राज्यकर्तृभिः ग्रामाध्यक्षैः सूतैः रथकारैः राज्ञां वरणम् इति 'ये राजानो राजकृतः सूता ग्रामण्यश्च ये' इत्यादि अथर्वश्रुत्या स्मर्यते। अयमेव क्रमः तैत्तिरीयब्राह्मणादिष्वपि लभ्यते। तत्र राजनिर्मातृणां राजकर्तृणां रत्नी इत्याख्या भवति। अयमर्थः "रत्निनामेतानि हवींषि भवन्ति, एते वै राष्ट्रस्य प्रदातारः" इति तैत्तिरीयवचनेन स्पष्टतरः। राजकर्मणि बहुजनमतस्य आसीन्महत्त्वमिति 'वरिष्ठा' पदस्य व्याख्यानावसरे सायणेन स्वभाष्ये स्पष्टमुक्तम्-बहवः सम्भूय यदि एकं वाक्यं वदेयुः तदा न परैः अविलंघ्यमिति। वाल्मीकीयायोध्याकाण्डानुरोधेन सर्वैः सुविदितमेवेदं तथ्यं यत् राज्ञा दशरथेन रामाय यौवराज्यप्रदानकाले तत्रत्यसामन्तानां नागरिकाणां ग्रामणीनां च एका सभा समायोजिता, समागतानां च तेषां चाभिमत रामपक्षे याचितम्। तस्मिन्नेव वाल्मीकीयरामायणे 'समेत्य राजकर्त्तारो भरतं वाक्यमब्रुवन्' इति वचने मुनीनाम् ऋषीणां चैकं विशेषणं 'राजकर्त्तार' इति लभ्यते; श्रूयते च रामे वनं गते, दशरथे च दिवं गते सति मार्कंडेय-वामदेवप्रभृतयो मुनयः समेत्य वसिष्ठमूचुः, यत् इक्ष्वाकुकुलोद्भवो भरतः शत्रुघ्नो वा राजपदे नियोक्तव्य इति। सच्चकिरजातक-तेलपत्तजातकेषु प्रजानामधिकारो न केवलं राज्याधिरोहणकाले वरणकाले वा दृश्यते, अपि तु प्रजानां विरोधेन कस्यचित् राजपदाच्च्युतिः कस्यचिच्च राजपदानर्हत्वमपि निर्णीतं दृश्यते।

उपरिनिर्दिष्टेन शास्त्राणां प्रमाणजातेन इदं स्पष्टं भवति यद् भारतवर्षे प्रजातन्त्रं नाम राजशासनं न सर्वथा अपरिचितं नापि च पाश्चात्यदेशीयैः उपायनीकृतम् इदं सर्वथा नवीनतमं रिक्थम्। 'राजा जनैः निर्वाचित एव राज्ये अधिकृत आसीत्' अत्र भवेत् केषांचित् विमतिः, तथापि इदं सर्वथा अविप्रतिपन्नमेव, यत् तदानीं स्वेच्छया स्वमतप्रकाशने प्रजासु अधिकारो निर्बाध आसीद् इति जनानुरोधेनैव च राजा शासनेऽधिकृति जात इति च। पाणिनीयसूत्रेषु तिसृणां परिषदां नाम श्रूयते-

(शेषांशः ६ पृष्ठे)

# दशमेश चरितम्

—आचार्य श्रीधर प्रसाद बलूनी शास्त्री
भजनपुरा दिल्ली-53

## अथ सप्तमः सर्गः

सम्प्राप्ते नियततिथौ सुताविवाहे,
प्रेम्णा सो विनययुतो फतेहशाहः ।
आशीर्भिर्भवति सुखं भवादृशानां
गोविन्दं परिणय पत्रिकां लिलेख । १॥

गोविन्दैः प्रथमकृतं तु भीमचन्दात्
वैरं तं स्मरति तदा विवाहकार्ये ।
नो सम्यग् गमनमतिर्बभूव तावत्
कन्यायै प्रचुरमदाच्च यौतुकानि ॥२॥

सत्कारं विमलमतिः फतेहशाहः
प्रीतः सन् गुरुजनयोस्तयो चकार ।
भृत्यांनां त्वुपवनमध्य एव तेषा
मावासं मुदितमना विद्यातिभव्यम् ॥३॥

प्रारब्धं सकलसुरार्चनं गृहेषु
मांगल्या चलति ततो विवाहयात्रां
राजन्यैः सपरिजनैः स्वसैन्यगुप्तैः
युक्तासीत् प्रवक्तनिनाद घोषयन्ती ॥४॥

केतूनामुपरि विसर्पिणी पदोत्था
धूलिः सा लसति यथा वितानमाला ।
कष्टानां परिमिति मेति तूर्य ध्वानं
यात्रा सा विभवविलासिनी रराज ॥५॥

दक्षान् तान् पथि सुविधां विधातुकामः
प्रेष्टाग्रे चलति सुखेन भीमचन्दः ।
पौंटायां नृपशिविराय कर्मकर्तुं
ते दूता गुरुमपि तादृशं वदन्ति ॥६॥

राजाज्ञां गुरुरथ नैव स्वीचकार स्मृत्वा
तत् प्रवसन कारणं स्वकीयम् ।
ब्रूते तान् गमनमथापि नैव तादृशानां
पन्थानं मृगयतु भूपतिस्तथान्यम् ॥७॥

शक्तिश्चेत् सकलनृपैः समेत्य भूयो
मां जित्वा व्रजत विवाहसाधनाय ।
पञ्चैते शतपुरुषा मदीयशिष्या
उद्दण्डान् दमयितुमेव सन्ति शक्ताः ॥८॥

सन्देशं समधिगतं यदा नृपेण श्रुत्वा
तत् विपुलवाच्यं गुरोः सकाशे ।
निर्विघ्नं भवतु विवाहमङ्गलं मे
याञ्चा सः प्रणतियुतो गुरुं करोति ॥९॥

गोविन्दो सचिवमुखेन याचनां तां
सख्यं तं गढपतिना कृतं विचार्य ।
साधुत्वात् भवतु सुखं वरस्य यात्रां
तन्तुंताननुमतिमदात्प्रहर्षणीयाम् ॥१०॥

शोभन्ते त्वथ वरयात्रिणोद्रिपीठे
पश्यन्तो हिमगिरि वैभवं समन्तात् ।
प्राप्तास्ते सुरसरितस्तटे पुनीते
स्नात्वा वै परमसुखं तथैव जग्मुः ॥११॥

वीक्ष्य श्रीनगरमतीव जातहर्षा
सत्कारं सविधि चकार भूनरेन्द्रः ।
सर्वेषां कुशलमनामयं च पृष्ट्वा
बद्रीशं प्रणमति स फतेदृशाहः ॥१२॥

भीमः स नगरविलोकने रतोऽपि
ज्ञात्वा गुरुपरिचारकान् तदा तु ।
पृष्टः सन् विततवितानमत्रदृष्ट्वा
क्रोधान्धो गढपतिमेवमेव ब्रूते ॥१३॥

गोविन्दो गुरुपदवीं दधाति शाठ्याद्
राजानः पददलिताः कृता तु दम्भात्।
यात्रायां मम विहितश्च तेन विघ्नो
निष्काश्यो भवति वयं तदा वसेम ॥१४॥

श्रुत्वैवं कटुघटनां फतेहशाहः
कन्यायाः परिणयकार्यविघ्नम्।
सन्देशं कथयति नन्दचन्दशिष्यौ
नेच्छामो गुरुगृहदत्तयौतुकं वै ॥१५॥

वार्तां तां सपदि निशम्य नन्दचन्दो
सामग्रीं कुशलतया समेत्य भृत्यैः।
प्रस्थानं त्वरितगती ततो विधत्तो
विश्वासो न भवति मत्तभूपतीनाम् ॥१६॥

यान्तं वै विपुलधनं स भीमचन्दः
दृष्ट्वा तं हरणविधौ मनश्चकार।
भूपालैः सहमत एव लोभदष्टः स्वान्
वीरान् झटिति दिदेश लुण्ठनाय ॥१७॥

तौ वीरौ त्वरितमती गुरुं तु मत्वा
वृत्तान्तं विनययुतं तदुक्तवन्तौ।
गोविन्दो समुचितमेव तौ प्रशंसन्
कार्यार्थे कथयति साधुवादान् ॥१८॥

सम्पन्नं परिणयबन्धनं तदानीं
मोदन्ते सकलजनाः सुखेषु मग्नाः।
शोद्धुं स्वां गुरुकृत वैरभावनां तां
भीमः स गढपतिमुवाच मन्दम् ॥१९॥

सम्बन्धाद् वयमिह मित्रतां वहामः
कन्यायाः श्वश्रुरपदं त्वया हि दत्तम्।
कार्यं मे भवतु सहायतां त्वदीयां
याचेऽहं प्रणतिभिरात्म रक्षणाय ॥२०॥

(क्रमशः)

(भारतीयं गणतंत्रम्-शेषांशः)

सामाजिकपरिषद्, चरणपरिषद्, मन्त्रिपरिषदिति च। परिषत्सदस्याश्च परिषदाः पारिषद्या वा तत्र कीर्तिताः। तत्रैवोक्तं राजा परिषद्वलो भवति इति। किं बहुना, ख्रीष्टात् पूर्वं प्रायः सप्तशताब्दीतः ख्रीष्टीयचतुर्थशताब्दं यावद् भारतवर्षे गणतन्त्र-राज्यानां सुमहान् विस्तारः दृश्यते। बौद्धकाले च तेषां माहात्म्यं जनेषु मूर्ध्नि स्थितम्, अवलोक्यते अतिशयितं च तत् श्रद्धास्थानं आदिवर्तमानभारतीय-गणतन्त्रं प्रति लोकेषु दृश्यते। तद्धि प्राचीनं गणतन्त्र-संघशासनद्वारा शत्रुभ्यः संरक्षितं स्वयं च सुदृढमासीत्। अत एव भारते वृत्तेषु गणराज्यानां महत्त्वं सदैवातिशेते। अत एवोक्तं चाणक्येन 'संघा हि संहतत्वात् अधृष्याः परेषामिति'। भगवता बुद्धेन लिच्छवीगणतन्त्रस्य उत्कर्षमाहात्म्यं प्रकाशयता उक्तं 'लिच्छवी परिसं तावतिंस सदि सन्ति'। तेषां दृष्टौ लिच्छवीजनाः स्वर्गस्थदेवैः सदृशाः आसन्। अस्ति इति वृत्तविदां मतं यत् गणानां महत्त्वमाकलय्यैव तदनुकारेण भगवता बुद्धेन स्वधर्मव्यवस्थाया-मपि 'संघ' संस्थाया निर्माणं व्यधायि। संघशासनस्य कृते ये सप्त अपरिहाणीया धर्मा बुद्धेन देशिताः, तेऽद्यापि गणतन्त्रसंरक्षणाय-भारतीयानां कृते महत्त्व-पूर्णा अवलोक्यन्ते।

इत्थं वेदकालत आरभ्य तथा कथञ्चित् उप-लभ्यमान गणतन्त्र शासनप्रकारः बौद्धकाले नितरां समुपबृंहितः सुव्यवस्थः सन् अधुनातमभारतीय-गणतन्त्रस्य धारण-पोषण, भूमिरिव वर्तमानो लक्ष्यते।

(संस्कृत-भवितव्यम्-तः साभारम्)

---

तुलसी पादपं नित्यं, गृहे यत्रा वतिष्ठते।
तद् गृहं तीर्थवत् पुण्यं, न यान्ति यम किङ्कराः॥

## हसनानि

—डा० रामसुमेर यादव साहित्याचार्यः
एम० ए०, एल० टी०, पी० एच० डी०
केन्द्रीय विद्यालय नं०४ भटिण्डा कैण्ट

(१) (हृदयविशेषज्ञः हृद्रोगिणं प्रति) यावत्त्वं जीवितो भूत्वा संसारे निवसिष्यसि। हृदयं ध्रुवं कार्यं करिष्यति भवतस्तावत्।

(२) पत्नी—चेद्वसुन्धरायां स्त्रीजातिः नाभविष्यत् तदा पुरुषस्य पैण्ट नाम्न्यधोवस्त्रे बटनसंयोजनं काऽकरिष्यत्?

पतिः—यदि भूमौ स्त्री नाभविष्यत् तदा पुरुषस्य कृते अधोवस्त्रस्यावश्यकतैव नाभविष्यत्।

(३) टिकटनिरीक्षकः—टिकटपत्रं प्रदर्शयतु भवान्।

ग्रामीणो जनः—मदीयं टिकटपत्रं केनापि चोरितम् तेनैव सहापि मे सर्वाणि रूप्यकाणि वस्तूनि च चोरितानि।

टिकट निरीक्षकः—परन्तु भवान् कुत्र जिगमिषिति?

ग्रामीणो जनः—इदमपि तस्मिन् टिकटपत्रे लिखितमासीत्।

(४) सेवकः—मदीयां वृत्तिं सम्बर्धयतु स्वामिन्?

स्वामी—अन्यथा त्वं किं करिष्यसि?

सेवकः—(साश्रुनयनः) एतावत्या वृत्त्यैव सन्तुष्टो भविष्यामि।

(५) निर्णायकः—नववस्त्रैः परिपूरितं सूटकेसं त्वया किमर्थं चोरितम्?

चौरः—महोदय! छिन्नभिन्नवस्त्रमवधार्य चौर कर्मणि लज्जामनुभवामि।

(६) विचित्रा—ममपत्युः कोऽपि केशच्छेदोऽपि कर्तुं न शक्नोति।

सुशीला—साहसिकः वीरश्चास्ति त्वत्पतिः?

विचित्रा—खल्वाटोऽस्ति।

(७) पुत्रः—रेडियो टीवी मध्ये कियदन्तरं भवति?

माता—वत्स! चेत्तव पिता गृहाभ्यन्तरे विवादं करोति तदा रेडियो अथ च विवदमानः यदा गृहात् बहिरायाति तदा टी० वी० अवगच्छतु।

## लोकार्पण-समारोहः

डॉ० अमियचन्द्र शास्त्रि द्वारा प्रणीतं श्रीमद्भगवत्परशुराम विजयशतकम् इति नामक संस्कृतकाव्यग्रन्थ। लोकार्पणोपलक्ष्ये समायोजितस्य समारोहस्य मुख्यातिथीनां विविधविद्या विद्योतनितान्तः करणानां प्राच्यपाश्चात्यपुराणे तिहास कथाधिगत विशेषयोग्यतानां नवधासम्प्राप्ताकादमीपुरस्काराणां समाधिगत कालिदासपुरस्काराणां हिमाचलप्रदेशस्य-शिमला विश्वविद्यालये संस्कृत विभागाध्यक्ष पदमधिरूढानां हिन्दी संस्कृतभोजपुरीकवीनां प्रख्यातकीर्तीनां डॉक्टरोपाह्वानां श्रीमतां तत्र भवतां मिश्रोऽभिराज राजेन्द्र महाभागानां स्वागतोपलक्ष्ये प्रस्तूयतेऽयं पञ्चपद्यप्रसूनत्वेन

## स्वागत प्रसूनोपहारः

ये विद्यानिधयो भवन्ति भुवने वाणीमहोपासकाः,
ये गङ्गा-यमुना-विधातृदयितोत्सङ्गे सदा वासकाः।
वालीद्वीप प्रवासकालकलया हिन्दूधरोद्धारकाः,
वन्द्यास्ते कविताकला-सुकुशलाः राजेन्द्रमिश्राभिधाः ॥१॥

येषां नित्यसरस्वती हि वदने वीणाभिवोद्वादिनी,
काव्यानन्द सुधाम्बुधौ सहृदयान् या मज्जयन्ती सदा।
लक्ष्मी-र्यन्मुखमण्डले शुचिगभस्तीन् पातयन्ती मुदा,
तेषां मिश्रविशिष्ट-शास्त्रविदुषामायानमानन्दम् ॥२॥

येषां जीवनलक्ष्यकेवलमिदं गीर्वाणवाक्सेवनं,
येषां ज्ञानमखण्डशुभ्रकिरण-प्रक्षेपलीलायुक्म्।
येषां शुक्ल-सुधांशुकल्पयशसा ज्योत्स्नायते भारती,
तेषां विश्वविशिष्ट-शास्त्र-विदुषाम् आयानमानन्दम् ॥३॥

ये शास्त्रेषु विचक्षणाः कविकला क्षेत्रेऽपि वाचस्पतिः,
ये धर्मध्वजधारणे सुनिपुणाः ये ज्ञानवारांनिधिः।
ये विश्वस्य हिमालयस्थ शिमला विद्यागृहेऽधिष्ठिताः,
ते वन्द्याः विदुषां वरेण्यसुधियो राजेन्द्रमिश्रा भिधाः ॥४॥

श्रीमन्तोऽत्रभवन्त आगमविदो विद्याविलासास्तु ये,
विद्यावन्त इमेऽभिराज विबुधाः कोसीं प्रपन्नाः यतः।
तेषां श्रीमुख प्राप्त दर्शनतया धन्याः वयं साम्प्रतं,
कोसीस्यान् वयमद्य सर्वमनुजान् धन्यान् तु मन्यामहे ॥५॥

प्रस्तोता रचयिता च—डॉ० अमियचन्द्र शास्त्री
'सुधेन्दु'
—मणिकुटीरम्—कोसी (मथुरा)

# कीदृशं स्वातन्त्र्यम् अधिगतम्

कु० प्रियम्वदा-शाण्डिकी
पाणिनि क० म० वि० वाराणसी

स्वतन्त्रतादिवसो गणतन्त्रदिवसश्च राष्ट्रीयपर्वणी इमे जनयतः कमप्यपूर्वमानन्दसन्दोहं भारतीयनागरिकहृदयेषु पुनरपि यादृश आनन्दो यादृश उल्लासः १९४७ तमे ख्रीष्टाब्दे प्रथमं राष्ट्रीयध्वजमुत्तोलयतां जनानां हृद्यासीत् सोऽद्य उत्तरोत्तर शिथिलत्वमापद्यते इत्यपि सत्यम्। कारणं सुस्पष्टं यथा रोगाक्रान्तस्य शिशोर्जीविताशा मूर्च्छिता जायते तथैव स्वतन्त्रं सदेव यद्राष्ट्रं रोगाक्रान्तं जात तत्खलु कियच्चिरं जीविष्यतीति विचार्य चेखिद्यन्ते चेतांसि चेतसाम्।

भारतस्य दौर्भाग्यान्नेतारो ऽनेन न खलु तादृशा लब्धा ये पौष्टिकाहारप्रदानेन स्वतन्त्रभारतशिशुं प्रयत्नपूर्वकं पोषयेयुः किं वा ये राष्ट्रस्यैकामपि समस्यां समूलं हन्तुं समर्था भवेयुरिति। ये केचन दूरद्रष्टारः परिपक्वमस्तिष्काः समस्यासमाधाने समर्था आसन् ते अपि अहमहमिकालोभेन पृष्ठतः कृताः। साम्प्रतं पुराकृतं भुज्येत कर्म इत्यनुसारं सर्वैर्देशवासिभिर्भुज्यते तत्फलम्। यस्मै पवित्रस्थानाय—पाकिस्तानाय विभाजनदुःखविदग्धहृदयेनापि भारतवर्षेण पञ्चपंचाशत्कोटिरूप्यकाणि साहाय्यार्थं दत्तानि उपकारान् विस्मृत्य सः पयःपानं भुजङ्गानां केवलं विषवर्धनम् 'इति चरितार्थयन् न केवलं कश्मीर प्रदेशम् अपितु सर्वमपि भारतवर्षं निगरीतुं समुत्सुकस्तिष्ठति। आतङ्कवादराक्षसरूपेणाद्यत्वे भारते प्रविश्य आतङ्कयति भारतीयान् अहर्निशम्। आतङ्कवादेनानेन अस्मदीयाः न जाने कियन्तो भ्रातरो मातरो स्वसारश्शिशवश्च कवलीकृताः ये जीवनि भयाक्रान्तास्ते ऽपि कलयन्ति श्वासान्। हन्त! किमिमा एवाशाः इमान्येव च स्वप्नान्यासन् स्वातन्त्र्यसमरे उत्सर्गीकृतसर्वस्वानां बन्धुवराणाम्? सर्वमेतत् समीक्ष्य त्विदमेव प्रतिभाति यत् स्वातन्त्र्यरूप्यमृतमयं दुग्धं महद्भिः प्रयासैः लब्धं तु किल, परं गृहीतमेतादृशे महामलिने पात्रे यत्तत्र निक्षिप्ते सत्येव दुग्धं तद् आमिक्षारूपेण परिवर्त्तितम्।

श्रूयते यद्देशस्य संविधानं सर्वोच्चमस्तिष्कैः मनीषिमूर्धन्यैः वर्षत्रयकल्पं यावत् सुदीर्घं कालं व्यत्याप्य सर्वदेशीयसंविधानानि च निरीक्ष्य अतीव सूक्ष्मेक्षिकया रचितमिति तदप्यसदेव प्रतिभाति। सूक्ष्मदृष्ट्या अवलोकनेन ज्ञायते यद् बहूनि छिद्राणि अस्माकं संविधाने एव विद्यन्ते। एकस्तावत् धर्मनिरपेक्षताविषय एव गृह्येत। सर्वप्रथमं तु कस्यचन राष्ट्रस्य कृते धर्मनिरपेक्षशब्द एव भयावहः। 'धारणाद् धर्ममित्याहुः" यानि कर्तव्यानि सदाचरणानि मनुष्यान् परस्परं धारयन्ति, तानि धर्मशब्दवाच्यानि। किं भारतदेशः कर्तव्यनिरपेक्षः सन् पशुवज्जीविष्यतीति संविधानेनोच्यते? नो चेत् सम्प्रदायनिरपेक्ष इत्युच्यताम्। यत्र सर्वे सम्प्रदायाः समानरूपेण पूजार्हाः भविष्यन्तीति। भारतीयमनीषिणां संविधानमिदं धर्मनिरपेक्षताया मनोहरं स्वरूपं निर्वर्ण्य अभ्यन्तरात् अल्पसंख्यकानेव सुतरां पुष्णाति। अतः सांसदैरपि अनुदिनं तेषाङ्कृते एव नवीननवीनानि विधेयकानि आनीयन्ते। तेषां धर्मस्थलानां पुनरुद्धाराय तेषां भाषायाः साहित्यस्य वा विकासाय विलोक्यन्ते यथा राजनेतारश्चिन्तातुराः न तथा मन्दिराणां संस्कृतस्य हिन्द्याः वा विकासाय। किञ्च कीदृशमिदं धर्मनिरपेक्षत्वं संविधानस्य यत्र सम्प्रदायविशेषनियमाः (पर्सनल लॉ) अपि सहैव घोष्यन्ते?

वस्तुतो विनैकया उपासनापद्धत्या, 'विनैकया

भाषया विनैकया च संस्कृत्या देशे ऐक्यं न भवितुमर्हतीति निश्चप्रचम्। उपासनापद्धत्या, वैचारिकपद्धत्या च ये समाना भवन्ति, भवति तेषु दूरस्थितेष्वपि स्वाभाविकोऽनुरागः। ऐतिह्यं साक्षि यावदस्माकं देशे एकोपासना पद्धतिः एका भाषा एका च संस्कृतिः प्रचलति स्म तावत् सुविशाले ऽप्यस्मिन् देशे ऐक्यं शान्तिश्च विराजते स्म। यथा चोक्तं रामायणे —"समा भाषा समो धर्मः" वर्तमान-युगे चापि येषु राष्ट्रेषु ऐक्यं दरीदृश्यते वर्तते तत्र इदमेव प्रमुखं कारणम्। विश्वस्मिन् सन्ति अनेके देशा येषां संविधाने तथा न परिपाल्यते पक्षपातपूर्वकं यथा भारतेन। ते तु वस्तुतः एकस्यैव धर्मस्य प्रामुख्यं संस्थाप्य शासनं प्रशासनं वा चालयन्ति।

अस्माकं प्रधानमन्त्री स्वतन्त्रतादिवसे लालकिला, प्राचीरात् सिंहगर्जं जगर्ज—'राष्ट्रे धर्मनिरपेक्षतायाः प्रचारो यदा भविष्यति तदैव देशे शान्तिर्भविष्यति, तदैव च मन्दिरमस्जिद विवादाः विलयं गामिष्यन्ति अतोऽस्मदीयसर्वकारस्य प्राथमिक कर्तव्यं धर्मनिरपेक्षताया मूलपरिपोषणं भविष्यति।' पृच्छयन्ते मया तत्रभवन्तः—अद्य धर्मनिरपेक्षं संविधानं निर्वाहयता भारतदेशेन चत्वारि दशकानि नीतानि एतस्मिन् अन्तराले कियती शान्तिरुत्पादिता विभिन्नसम्प्रदायवत्सु? शान्तिः कुत्र क्रान्तिरेव क्रान्तिः। किञ्च भवतां मते किम् इयमेव धर्मनिरपेक्षता यत्रैकस्य विशिष्टवर्गस्य मानमर्दनम् (गलाघोटनम्) एव रात्रिन्दिवङ्क्रियेत? सर्वकारेण सम्प्रत्येव धर्मस्थलविधेयकं यदानीतं तदपि हिन्दूनां मानमर्दनार्थं किन्नास्ति? भविष्यति काले या कदाचिद् हिन्दवो रामजन्मभूमिवत् मथुरायाः कृष्णमन्दिरं वाराणस्याश्च विश्वनाथमन्दिरम् अधिकर्तुं प्रयतेरन् विधेयकस्यास्य पृष्ठभूमौ इदमेव तु भयं विहितं सर्वकारस्य। इतरेभ्यो नास्ति किञ्चिद् भयम्। ते तुवर्तन्ते औरसाः पुत्राः। इमे यदपि कथयन्ति कुर्वन्ति च तत् सर्वं संविधानानुकूलम्। संविधाननियमेषु जनसंख्यावृद्धेर्दण्डोऽस्मास्वेव, सहिष्णुतायाः नम्रतायाश्च पाठोऽस्मभ्यमेव। साम्प्रदायिकोत्पातेषु ये प्रज्वालयन्ति गृहाणि, गृञ्जनमूलकवत् कर्थयन्ति मानवान् औषधरूप्यकादिभिः प्रायस्त एव प्रसाद्यन्ते राजनेतारो वदन्ति - यदि अल्पसंख्यकाः स्वसुरक्षार्थं शस्त्राणि गृहेषु स्थापयन्ति तर्हि का विप्रतिपत्तिः हिन्दूनाम्? अहं वच्मि अल्पसंख्यकानां पार्श्वे शस्त्राणि दृष्ट्वा हिन्दवोऽपि तत्प्रतीकाराय स्वात्मसुरक्षार्थं शस्त्राणि स्थापयन्तु चेत् का विप्रतिपत्तिः सर्वकारस्य? पुनश्च किं भीः संख्यातो भयं भवति शौर्याद् वा? एकेनापि राक्षसेन मनुष्यशतं न बिभेति किम्? अतोऽस्माकं सुदृढो ऽयं विचारो यदनेन धर्मनिरपेक्षशब्देन वयं भारतीयाः कायरतामेव प्रापिताः। अस्याः कायरतायाः एवैष दुष्परिणामो यदद्य वीर पुङ्गव राणा प्रताप छत्रपति शिवाजी सदृशानां धर्मरक्षकाणां बलिदानानि विस्मारयितुं प्रयत्यन्ते।

देशे ऐक्यमानेतुमुत्सुकाः सप्रश्रयं निवेद्यन्ते मया-पुष्पादीनि यानि जडवस्तूनि सन्ति तेषु ऐक्यं कुसुमस्तवक—गुलदस्तादि रूपेण शक्नोति भवितुम्। (यद्यपि तदपि मनुष्यबुद्धिकृतमेव) परं चेतनेषु मानवेषु ऐक्यं तु विचाराणाम् आचार पद्धतीनाञ्च ऐक्येन बिना नतरां भवितुमर्हति एकेषां संस्कृतौ उच्यते - एकस्यैवोपकारस्य प्राणान् दास्यामि ते कपे शेषस्यैवोपकारस्य भवाय ऋणिनो वयमा अपरेषां संस्कृतौ —सहस्रमुपकारिणोऽपि हन्तव्या एव न त्याज्याः। एकेषां धर्मग्रन्थो ब्रवीति—पशूनां भक्षणं परमो धर्मः अपरेषाम्—अहिंसा परमो धर्मः, मा हिंसीत् पुरुषान् पशूंश्च "कथन्नु अत्र ऐक्यं भवेत्? अतो ऽस्माभिः सम्भूय तथा प्रयतनीयं यथा वेदादेशानुसारं सर्वेषामपि देशवासिनां समानं मनः समानी समितिः, समानी प्रपा, समानाश्च मन्त्राः= विचाराः भवेयुरिति। नूनं तदास्माकं स्वातन्त्र्यदीपको जनजनहृदयं दीपयिष्यति इति।

## तस्यै नमो मातृवसुन्धरायै

कृष्णदत्त शर्म्मा शास्त्री
सेवा नि० सह जिला विद्या० निरी०
८१ जवाहरगंज, हापुड़ (जि० गा०) उ०प्र०

महीयसीयं धरिणी मदीया,
प्राणार्पणेनापि सुरक्षणीया।
देवालयाच्चापि गरीयसी या,
तस्यै नमो मातृवसुन्धरायै ॥१॥

पूज्या सदा या जननीव नित्यम्,
पुष्णाति पूतं सुपयः प्रदानैः।
या सर्वथा पोषयतेस्वपुत्रां
स्तस्यै नमो मातृवसुन्धरायै ॥२॥

मनोहरैः पुष्पलताप्रसूनैः,
संशोभते या सुवनैर्मनोज्ञैः।
पुण्यप्रदैस्तीर्थजलैः पवित्रै,
स्तस्यै नमो मातृवसुन्धरायै ॥३॥

आस्वाद्यतोयैर्गिरिनिर्झरैर्या
नीरं सदा स्रावयतीह पेयम्।
मन्ये सुमाता हि पयस्विनी सा,
तस्यै नमो मातृवसुन्धरायै ॥४॥

सुगन्धवाहो मम जन्मदां यां,
संसेवमानो भजते सुमोदम्।
सौख्य प्रदायै सुतवत्सलायै,
तस्यै नमो मातृवसुन्धरायै ॥५॥

प्रभाकरः प्रातरुदेत्यनित्यं,
यस्याः सुपादौ स्व करैरनिन्द्यैः।
संस्पृश्य धन्यं विदधाति जन्म,
तस्यै नमो मातृवसुन्धरायै ॥६॥

चन्द्रो निशाया दिवसे च भानु,
र्ब्राह्मे मुहूर्ते विहगा विरावैः।
गायन्ति मुग्धाः सुगुणान्-हि यस्या
स्तस्यै नमो मातृवसुन्धरायै ॥७॥

यस्या ललाटे नगराजराजः,
सूर्यः प्रभाभिः समुदीर्णरागः।
विराजते शुभ्रकिरीटतुल्य
स्तस्यै, नमो मातृवसुन्धरायै ॥८॥



यस्याः समुद्रश्चरणारविन्दं,
रात्रिंदिवं स्वच्छतरंगहस्तैः।
प्रक्षाल्य धन्यं कुरुते स्वनीरं,
तस्यै नमो मातृवसुन्धरायै ॥९॥

अंके हि यस्या नितरां प्रसन्ना,
आस्वाद्यतोया विपुला विशालाः।
क्रीडन्ति नित्यं सरितो गभीरा
स्तस्यै नमो मातृवसुन्धरायै ॥१०॥

यस्याः प्रसिद्धं सुयशो विशुद्धं,
गायन्ति देवा मुदिताः स्वलोके।
भूम्यां वचोभिर्नृवरा गृणन्ति,
तस्यै नमो मातृवसुन्धरायै ॥११॥

यस्या रजो मातृवसुन्धराया,
निजांगरागं कुरुते महेशः।
कथं न सा स्यात् स्व सुतैःप्रपूज्या,
तस्यै नमो मातृवसुन्धरायै ॥१२॥

# प्रकृतौ पुरुष वर्णनम्

—धीरेन्द्र झा, संगठन सचिवः
लोकभाषा-प्रचार-समितिः विहार शाखा
गैस गोदाम के पीछे, संस्कृतनगरम् छपकी,
लक्ष्मीसागरः दरभंगा-८४६००४ (बिहार)

निसर्गेण समं लोके यथा मानवजीवनम्।
ग्रथते कालिदासोऽत्र न तथान्यः कविः क्वचित् ॥

इदं जगत् प्रकृति पुरुषात्मकम्। तत्र पुरुषो निरधर्मकत्वात् अनिर्वचनीय। "न तत्र चक्षुर्गच्छति न वाक् गच्छति, न मनो गच्छतीत्यादिश्रुतेः। अतोऽसौ पुरुषः न जातुचित् वर्णना विषयो भवितुम् अर्हति। वर्णनं तु केवलम् —"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च अहंकार इतीयम् मे भिन्ना प्रकृतिरष्टधा" इत्युक्तरूपेण निरूपितायाः प्रकृतेरेव भवति। किन्तु अष्टधोक्त लक्षणा प्रकृतिरियम् जड़भूता। एतस्यां प्रकृतौ चिन्मयस्य सतः पुरुषस्य दर्शनम्, साकल्येन तद् वर्णनमेव च कवित्वम्। इयमेव क्रान्तदर्शिता। जडायां प्रकृतौ सर्वावयव सम्पन्नस्य पुरुषस्य दर्शनेन तद् वर्णनेन च कवयः क्रान्तदर्शिन उच्यन्ते। तत्रास्मिन् उक्तलक्षणे कविकुलकमलदिवाकरः दिक्षु-दिक्षु वितत कीर्तिकायः सर्वलोकवन्द्यस्तत्र भवान् कालिदासः परमं सर्वोत्कृष्टं च स्थानमलङ्करोति।

कवयस्तु सुरभारती समुपासनानिरताः विविध चमत्कारिक वर्णन विशेषैः चमत्कृल्लोकमानसाः अनेके बभूवुः, किन्तु तेषु सर्वेषु कविवरेषु तारकायमानेषु कविकुलगुरुः कालिदासः अनभ्रे साहित्याकाशे पूर्ण शरच्चन्द्रवत् चकास्ते।

कवेरस्य समस्तानि दृश्यश्रव्य काव्यानि प्रकृति ललनायाः ललित. ललितैः भावविलासैः भूयो विभूषितानि सन्ति। तस्मादेवोच्यते—"कालिदासो विलास" इति।

महाकवेरस्य निसर्ग-वर्णन-चातुर्यम् स्थालीपुलाकन्यायेन यथामति किञ्चिदुद्धृयते। कलेवरदृष्ट्या च महत्तमे महाकवेरस्य मेघदूत नामके खण्डकाव्ये—"कान्ता विरहगुरुणा वर्षभोग्येन भर्तुः शापेन अस्तंगमित महिम्नो यक्षस्य कृते महाकविरसौ शापावधि यापनार्थं रामगिर्याश्रमाणामेव चयनम् करोति। अत्र यद्यपि स्वाधिकारात् प्रमत्तस्य भर्त्राशप्तस्य, तस्य कृते कारागृहस्य चयनं सम्भवमासीत् किन्तु नियति नायिका लावण्यलोलुपः रससिद्धो महाकविः कालिदासः तथा न अकरोत्। यतो हि तथा कृते सति वप्रक्रीड़ापरिणत गजप्रेक्षणीयस्य मेघस्य गर्भाधानक्षणपरिचयात् आबद्धमालानां बलाकानाम्, परिणत फलद्योतिभिः काननाम्रैः छन्नोपान्तस्य स्निग्धवेणी सवर्णस्य, पृथिव्या स्तन इव प्रेक्षणीयस्य आम्रकूट पर्वतस्य विन्ध्यपादे गजस्यांगे भूतिरेव विरचितायाः रेवायाः अम्भोबिन्दुग्रहण चतुराणां चातकानाम् वेत्रवत्याः सुभ्रूभंगं मुखमिव तीरोपान्तस्तनित सुभगस्य पयसः वीचिक्षोभ स्तनित विहगश्रेणिकाञ्चीगुणायाः स्खलित सुभगं संसयन्त्याः दर्शितावर्तनाभेः निर्विन्ध्यायाः स्त्रीणां सुरतग्लानिहरतः प्रार्थना चाटुकार प्रियतम इव शिप्रा वातस्य—

एवंरीत्या मानव इव सुखदुःखादि संवेगयुक्तायाः प्रकृतेः वर्णनस्य सौभाग्यम् नाभविष्यत्। अस्मादेव महाकविना कालिदासेन यक्षस्य शापावधिरतिवाहार्थम् रामगिरि प्रान्तस्य चयनम् कृतम्।

दूतचयनेऽपि कविनानेन लोकोत्तरकल्पनाचातुरी प्रदर्शिता। कालिदासस्य स्थाने यदि चेत् कोऽपि अन्यः कविरभविष्यत् तर्हि स दौत्य कर्म निर्वाहार्थम् कस्यचित् प्रत्युत्पन्नमतेः वाक्पटोः, धैर्योत्साह सम्पन्नस्यसुदर्शनस्य पुरुषस्य चयनमकरिष्यत्। किन्तुकविकुलगुरुणा कालिदासेन तथा न कृतम्। स मेघम् धूमज्योतिः सलिलमरुतां सन्निपातरूपेण अभिजानानोपि "कामार्त्तस्य कामार्त्तिकारणाच्च चेतनाश्चेत-

नेषु प्रकृतिरूपणस्य'' स्वकीय नायकस्य यक्षस्य कृते मेघस्यैव चयनमकरोत्। कीदृशोऽस्ति तस्य मेघः इति तस्यैव वचसा अवधार्यताम् तावत्—

"जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपम् मघोनः ॥"

पद्येऽस्मिन् मेघस्य कृते प्रकृतिपुरुष इति विशेषणमेव तावत् प्रधानमस्ति। कविः मेघं न मेघरूपेण, अपितु मानववत् सुख-दुःखादि संवेदनशील प्रकृतिपुरुषरूपेण उपस्थापयति। काव्येऽस्मिन् कविः सर्वत्र जडे चेतनस्य, प्रकृतौ पुरुषस्य च दर्शनम् करोति। अलमस्तु तावत् प्रसंगेऽस्मिन् द्वित्रैः उदाहरणैः।

स ग्रीष्म ऋतौ प्रतनुसलिलायाम् निर्विन्ध्यायां विरह-कृशायाः तरुण्याः दर्शनम् करोति। तद्यथा—

"वेणीभूतप्रतनुसलिलाऽसावतीतस्य सिन्धुः, पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः। सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः॥" एवमेव गम्भीरायाः जलविनिर्मुक्ते रोधसि नितम्बिन्याः नितम्बस्य अवलोकनं करोति तद्यथा—"तस्याः किंचित्कर-धृतमिव प्राप्तवानीरशाखम्, हृत्वा नीलं सलिलवसनं मुक्त-रोधो नितम्बम्। प्रस्थानं ते कथमपि सखे! लम्बमानस्य भावि, ज्ञातास्वादो विवृत जघनां को विहातुं समर्थः।"

स मेघं मानव इव महाकालस्य संध्याबलि पटहतं निर्वोढुं यक्षमुखेन प्रार्थयति तद्यथा—"अप्यन्यस्मिञ्जलधर! महाकालमासाद्य काले स्थातव्यं ते नयनविषयम् यावदत्येति भानुः। कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीयामामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥"

तदित्थं कवेरस्य निखिलेषु काव्यप्रपञ्चेषु मानवजीवनस्य प्रकृत्या सह ग्रथनम् विलोक्यते इत्यलम् पल्लिवतेन।

# विचार-मंजरी

१. विद्या, तप, धन, सुदृढ़ शरीर, युवावस्था और उच्च कुल सत्पुरुषों के ये छः गुण हैं।

२. विश्व का समस्त ज्ञान गीता से प्रारम्भ होता है और इसी में समाप्त होता है। जो इसमें नहीं वह और कहीं नहीं।

—महात्मा गांधी

३. सच्ची शिक्षा विवेक जगाकर सुन्दर व्यवहार करना सिखाती है।

४. सेवा=भक्ति —विनोवा जी का फ़ार्मूला।
अहंकार

५. सबसे महान् कलाकार वह है जो अपने जीवन को ही कला बना दे।

६. देव मेरा है कहने की बजाय यह कहना चाहिए कि मैं देव का हूं। लहर समुद्र की है न कि समुद्र लहर का है।

—चैतन्य महाप्रभु

७. अगर मैंने अंग्रेजी शिक्षा न पाई होती तो मैं देश को इससे जल्दी आजाद करा पाता।

—गांधीजी

८. हमारे सामने बड़े-बड़े सवाल हैं। हमारा काम तब तक खत्म नहीं हो सकता जब तक कि हम उनका जवाब न दे लें। हमारा उद्देश्य भारत के करोड़ों मनुष्यों को सुखी और उद्देश्यमय जीवन की ओर अग्रसर करना है।

—जवाहरलाल नेहरू

संग्रह कर्त्ता—दिनेश्वर आदि गौड़
बी० १५० कर्मपुरा, नई दिल्ली-१५

संस्कृतामृतं पठत, ग्राहकाः च अस्य भूत्वा
संस्कृतं—प्रसारे योगं दानं कुरुत।

## दुर्लभो नरः

—पं० परमेश्वर अय्यरः
दिल्ली

अस्तेयनिष्ठः प्रियपथ्यवक्ता
कारुण्यवान् प्राणिगणे समस्ते।
एतादृशो दुर्लभ एव मर्त्यो
देशेऽस्मदीये बत भारतेऽद्य ॥१॥

अचापलं ह्रीमृदुमानसत्वं
त्यागः क्षमा शौचमलोलुपत्वम्।
ईदृग्गुणोपेतमपेतदौष्ट्यं
तं मानवं दुर्लभमेव मन्ये ॥२॥

दमेन दानेन च यज्ञरत्या
मनः प्रसादेन समन्वितेन।
उत्तंभिता भूमिरनेन पुंसा
हा हन्त सर्वत्र च दुर्लभेन ॥३॥

शरीरवाङ्मानस सत्तपस्या
समन्विताय श्रुतितत्पराय।
नमः सहस्रं भवतु प्रदत्तं
नराय तस्मै मम दुर्लभाय॥४॥

अदंभिताऽद्रोह मुखैर्वरिष्ठैः
सत्त्वैकमूलैः सुगुणैः समेतात्।
किन्त्वत्र देशे हहह दुर्लभाच्च
नरात् परं वेद्मि न पुण्यकीर्तिम् ॥५॥

नैवार्दयेद्यो वचसापि कंचित्
यश्चापि मन्दस्मित पूर्वभाषी।
सर्वेशभक्ते भुवि दुर्लभस्य
तस्यैव कीर्तिर्जयति त्रिलोक्याम् ॥६॥

नित्याभियुक्ते निजधर्मकृत्ये
श्रद्धान्विते च प्रणिधानकार्ये।
नरे किलेदृग्गुणवत्यनिन्द्ये
किं दुर्लभे नास्तु मनः सुसक्तम् ॥७॥

चाटुस्तुतिष्वनभिलाष तथैव मिथ्या
निन्दासु निश्चलमते धृतिमन् महात्मन्।
अत्यन्त दुर्लभ नर प्रणतिस्तवांघ्रयो
र्लोके गतानुतिकेऽत्र पृथक् स्थितस्य ॥८॥

## यक्षीय-प्रश्नाः

(व्यंग्योक्तयः)

—कृष्णदत्तः शर्म्मा शास्त्री
एम० ए० (हि० सं०) एल० टी
सेवा नि० सह जिला वि० निरी०
८१ जवाहरगंज, हापुड़ (गाजि० उ० प्र०)

प्रश्नाः—को धर्मः कश्च नेताऽत्र, किं तीर्थं कश्च मोदते ?
को मान्यश्च किमाश्चर्यं मेतद् ब्रूहि कलौ युगे ॥

उत्तराणि—

क्रौर्यञ्च धौर्त्यं परहिंसनञ्च,
दौष्टयञ्च शाठ्यं परवञ्चनञ्च।
स्वाभीष्टसिद्धिः परनिन्दनञ्च,
कलौ सखे श्रेष्ठतमोऽस्ति धर्मः ॥१॥

हितं स्वदेशस्य च देशजाना—
मचिन्तयित्वाच्छलदम्भ दण्डैः
स्वार्थं सदा साधयितुं प्रवीणः
नेता स लोके भवितुं समर्थः ॥२॥

गंगा न तीर्थं मथुरा न काशी,
वृन्दावनं नैव तु मोक्षदं यत्।
रामेश्वरं राम सुपूजितं न,
तीर्थन्त्विदानीं श्वसुरस्य गेहम् ॥३॥

ऋणं कृत्वा न यो दद्यात् परस्वं मन्यते स्वकम्।
अश्रोता परवाक्यानां, मोदते सर्वथा कलौ ॥४॥

क्रूरो नृशंसो जनरावणो यो,
धनङ्गृहीत्वा परहिंसको यः
परापहर्ता खलु तस्करो यो,
मान्यो हि लोके बलवान् कलौ सः ॥५॥

उत्कोचग्राहिणं लोके, लोको निन्दति सर्वदा।
ददाति चापि गृह्णाति, किमाश्चार्यमतः परम् ॥६॥

---

वर्तमान वर्षस्य संस्कृतामृत—शुल्कं
अप्रेषितं चेत्, कृपया शीघ्रं प्रेषयत।

---

## व्रतोत्सव-निर्देशिका

दिनाक २१-८-१९९२ त: २०-९-१९९२ पर्यन्तम्)

| दिनांक: | वार: | तिथि: | व्रतोत्सव: |
|---|---|---|---|
| २१-८-९२ | शुक्रवार: | अष्टमी | श्रीकृष्णजन्माष्टमी व्रतम्, दूर्वाष्टमी व्रतम् |
| २२-८-९२ | शनिवार: | नवमी | शरद् ऋतु प्रारम्भ: गुग्गा नवमी पर्व |
| २४-८-९२ | सोमवार: | एकादशी | अजा एका० व्रतम् |
| २५-८-९२ | मंगलवार: | द्वादशी | प्रदोष व्रतम् |
| २८-८-९२ | शुक्रवार: | अमावस्या | कुशोत्पाटिनी-अमा पर्व, नासिक कुम्भ पर्व |
| ३०-८-९२ | रविवार: | तृतीया | श्री वाराह जयन्ती हरितालिका व्रतम् |
| ३१-८-९२ | सोमवार: | चतुर्थी | श्री गणेश व्रतम् (कलंक चतुर्थी) |
| १-९-९२ | मंगलवार: | पञ्चमी | ऋषि पञ्चमी |
| २-९-९२ | बुधवार: | षष्ठी | सूर्य षष्ठी व्रतम् |
| ४-९-९२ | शुक्रवार: | अष्टमी | श्रीराधाष्टमी श्री महालक्ष्मीव्रतम् |
| ५-९-९२ | शनिवार: | नवमी | श्रीचन्द जयन्ती |
| ७-९-९२ | सोमवार: | एकादशी | पद्मा एका०व्रतम् |
| ८-९-९२ | मंगलवार: | द्वादशी | श्री वामन द्वादशी |
| ९-९-९२ | बुधवार: | त्रयोदशी | प्रदोष व्रतम् |
| १०-९-९२ | वृहस्पति० | चतुर्दशी | अनन्त चतुर्दशी व्रतम् |
| ११-९-९२ | शुक्रवार: | पूर्णिमा | श्रीसत्यनारायण व्रतम् श्राद्ध प्रारम्भ: |
| १५-९-९२ | मंगलवार: | तृतीया | श्री गणेश व्रतम् |
| १६-९-९२ | बुधवार: | चतुर्थी | संक्रान्ति, सूर्य: कन्या राशौ |
| १९-९-९२ | शनिवार: | सप्तमी | महालक्ष्मी व्रतम् |

(शुभकार्येषु वर्ज्यं पञ्चकम्—दिनांक ९-९-९२) (५४ घ० १४ प०)—त: दिनांक १४-९-९२ (५२ घ० ३२ प०) पर्यन्तम्)

—शिवमस्तु

# दुर्लभं भारते जन्म

—नरेन्द्र ठक्कुरः
स्नातक प्रतिष्ठा (संस्कृत) नारायणपुरम् (पूर्वीचम्पारण) बिहारम्

भारतवर्षं सर्वेषां राष्ट्राणां श्रेष्ठतमम् अस्ति। श्रेष्ठतमे राष्ट्रे परमपुण्यशीलाः जनाः जन्म लभन्ते। पुण्योपार्जनम् अत्यन्तं दुर्लभम् अस्ति। अतः भारते मानवानां जन्म दुर्लभम् अस्ति। ये ये परम भाग्यशालिनः सन्ति ते एव भारते जन्म लभन्ते।

भारतवर्षस्य स्थितिः अतीव रमणीया अस्ति। अस्य उत्तरस्यां दिशि हिमालयः शोभते। अयं पर्वतः भारतमातुः किरीट इव प्रतिभाति। अस्य शिखरेषु हिमस्य धवलिमा परमशोभनीयो भवति। अस्य पर्वतस्य क्रोडे अस्माकं देशस्य भारतस्य श्रेष्ठतमं सुन्दरतमं च काश्मीरप्रदेशः विराजते। काश्मीरप्रदेशस्य शोभा अवर्णनीया अस्ति अनेनैव भारतस्य गौरवं वर्धते। एवं हिमालयपर्वतीयप्रान्तेषु नैनीताल, गढ़वाल, शिमला इत्यादीनि बहूनि रम्याणि नगराणि सन्ति। बहवः विदेशीयाः इमानि मनोहराणि नगराणि द्रष्टुं प्रतिवर्षं भारतं आयान्ति। तत्र नगरेषु कंचित् कालं उषित्वा ते प्रसिद्धानि स्थानानि अवलोक्य अतीव प्रमुदिताः भवन्ति। एतानि पर्वतीयस्थानानि स्वर्गं तुल्यानि दृश्यन्ते। एतेषां नगराणामपूर्वां शोभामवलोक्य कस्य मनः न प्रसीदति। बहवः रोगिणः वायुसेवनार्थं तत्र गच्छन्ति। तेषां रोगनिवृतिरपि तत्र भवति।

एतेषां स्थानानां जलवायुः स्वच्छः निर्मलः स्वास्थ्यवर्धकश्च भवति।

भारतस्य दक्षिणभागे हिन्दमहासागरः भारतमातुः चरणौ प्रक्षालयति। समुद्रतटीयप्रदेशेषु बहूनि रम्याणि नगराणि शोभन्ते। एतेषां नगराणां महती शोभा अवलोकनीया अस्ति। अनेन सागरेण अस्मिन् देशे वर्षाः भवन्ति। भारतस्य मध्यभागे विन्ध्याचलः शोभते। अयं पर्वतः रमणीयः अस्ति। अस्मिन् पर्वते विन्ध्यवासिन्याः देव्याः मन्दिरं तिष्ठति। इदं मन्दिरम् अतीव प्राचीनतमं अस्ति। विन्ध्याचलाख्यं नगरं अस्मिन् पर्वते अतीव रमणीयम् अस्ति। इदं नगरं गंगा नद्याः तटे तिष्ठति। अस्य नगरस्य शोभा विलक्षणं भवति। एवम् अस्मिन् भारते दिल्ली, कलकत्ता, बम्बई, मद्रास इत्यादीनि नगराणि अतीव मनोहराणि सन्ति। एषां नगराणां प्रकृति सौन्दर्यम् अवलोकनीयम् अस्ति। एषु नगरेषु सर्वाणि वस्तूनि प्राप्यन्ते। तत्र महान्ति मनोहराणि आपणानि सन्ति।

अस्मिन् भारते षड् ऋतवः सन्ति। एते ऋतवः परमाः शोभनीयाः सन्ति। अस्मिन् देशे कृषकाः परिश्रमशीलाः भवन्ति। ते नाना विधानि अन्नानि उत्पादयन्ति। अस्मिन् भारते नाना वनानि, उपवनानि प्रसिद्धस्थानानि च सन्ति। अयं परम शोभनीयः देशः। अस्मिन् एव देशे भगवान् रामचन्द्रः कृष्णचन्द्रश्च अवतीर्णौ आस्ताम्।

अतः भारतवर्षात् न कोऽपि देशः अधिकः शोभनीयः अस्ति।

उक्तं च भारतस्य विषये केनचिद् कविना—

पुण्यान्नार्यो नराश्चैव लभन्ते जन्म भारते।
अन्यथा दुर्लभं जन्म भारते कथ्यते बुधैः॥ इति॥

---

लोकतन्त्रात्मकं भारतं विजयते तराम्।

---

# समाचाराः

दिल्ली संस्कृत अकादमी—दिल्ली प्रशासनम्

1—संस्कृतानुरागिणः सम्मानिताः

—8-7-92 दिनांके "अकादमी" स्थानीये पुराणा-सचिवालय—सभागारे समारोहं समायोज्य निम्नलिखितान् महानुभावान् सम्मानितान् अकरोत्—(1) डा० शब्बीर अहमदः, (उपनिदेशक—शिक्षा निदेशालय दि० प्रशा०) (2) श्रीमती हरपाल कौर फुकेला, (उपप्राचार्या) (3) डा० शक्ति कपूर, (प्राचार्य) (4) श्री हरिदेवाचार्य (प्राचार्यः) (5) आचार्य श्री रामशास्त्री, (6) श्री अनिल नरेन्द्रः (सम्पादक दैनिक वीर अर्जुन) (7) श्री रमाकान्त गोस्वामी (मु० सम्वाददाता दैनिक हिन्दुस्तान) (8) श्री विभावसु तिवारी (मु० सं० दा० दैनिक नवभारत टाइम्स) (9) श्री उमेश लखन पालः, (मु० सं० दा० पञ्जाब केसरी) (10) श्री लोकेश श्रीवास्तवः (मु० सं०दा० दैनिक जागरण) (11) श्री सुशील कुमारः, (मु० सं०दा०जनसत्ता) (12) श्री राजीव सक्सेना (मु० सं० दा० राष्ट्रीय सहारा)।

दिल्ली प्रशासनस्य वित्तायुक्तः श्री सेवाराम शर्मा प्रत्येकं सम्मानिताय प्रशस्तिपत्रं प्रतीकचिन्हं प्रावारं च प्रायच्छत्। संस्कृत-उन्नयन-सहयोग प्रदानाय सम्मानितानां आभारं अभिव्यक्तवान्।

समारोहः अध्यक्षत्वेन डा० रामकरण शर्मा (पूर्व कुलपति सम्पूर्णा० सं० वि० वि० वाराणसी) प्राभाषत यत् संस्कृतभाषा विश्व भाषा विद्यते न तु वर्ग विशेषस्य। एषा एव विश्वजनान् एकता सूत्रे बध्नाति। एतस्याः उन्नयनं, उन्नयने च सहयोगः श्लाघ्य एव। अत्रावसरे डा० कृष्णलालः (दि०वि०वि०) डा० पुष्पेन्द्र कुमारः शर्मा (दि०वि०वि०) रमाकान्त गोस्वामी, डा० शक्ति कपूर, डा० शब्बीर अहमद महोदयाः अपि प्राभाषन्त॥ मञ्च सञ्चालनं अकादमी सचिवः श्री श्रीकृष्ण सेमवालः कृतवान्॥

2—संस्कृत परिचर्चा

—11-7-92 दिनांके "अकादमी" स्थानीये मण्डावली उपनगरे "महाभारतकाले शिक्षण व्यवस्था" इति विषय मधिकृत्य "संस्कृतपरिचर्चाम्" समायोजयत्। अत्रावसरे श्री कुलानन्द भारतीय महोदयः (पूर्व का० का० पार्षद शिक्षा दि० प्रशा०) प्राबोधयत् यत् तदाकाले शिक्षणक्षेत्रे सर्वे विद्यार्थिनः समानतां भजन्ति स्म। दान-प्रेम-त्याग-सेवा-अनुशासन-एकताभावाः शिक्षया अधिगम्यन्ते स्म। डा० पुष्पेन्द्र कुमार शर्मा (दि०वि०वि०) प्राह—महाभारत काले धर्म-अर्थ-काम-मोक्ष-शस्त्र-युद्धादि विद्यानां ज्ञानं दीयते स्म। शिक्षा गुरुशिष्ययोः सत् सम्बन्ध कारिणी, चरित्र निर्माण कर्त्री सकारात्मिका च भवितव्या।

आचार्यः जयराम शर्मा (प्राचार्यः) प्राबोधयत् यत् महा भारत काले शिक्षा दायित्वबोध दायिनी आसीत्। महर्षि वेद व्यासेन महा भारत लेखन द्वारा सर्वस्यापि विश्वस्य महान् उपकारः कृतः। अद्यत्वे शिक्षा-व्यवस्था राष्ट्रानुकूला भवितव्या इति।

परिचर्चा अकादमी सचिवः श्री कृष्ण सेमवालः सञ्चालितवान्।

3—संस्कृत परिसंवादः—

15-7-92 दिनांके 'अकादमी' स्थानीये फिक्की सभागारे 'संस्कृत परिसंवादम्' समायोजयत्। अत्र भारतीय अस्मिता एवं जाति व्यवस्था इति विषय मधिकृत्य डा० वाचस्पति उपाध्यायः, श्री पी० एल० बाल्मीकि, श्री राजेन्द्र यादवः, डा० धर्मपालः, श्री शैलेश मटियानी, डा० शक्ति कपूर, श्री शब्बीर अहमद, डा० सत्य पाल नारंग, डा० मोहम्मद इसराइल, डा० नरदेव शास्त्री, प्रभृतयः विद्वांसः निज विचारान् प्रकटित वन्तः, जन्माधारितायाः जाति व्यवस्थायाः अपेक्षया व्यवसायाधारितां वर्ण जाति व्यवस्थां समर्थितवन्तः।

अध्यक्षत्वेन सुप्रसिद्धः पत्रकारः श्री अरुण शोरी महाशयः जाति व्यवस्थायाः प्रसारं समाजाय घातकं प्रति पादित वान् जगति व्यवस्थायां सुधारणावश्यकतां समर्थितं वान्।

विशिष्टातिथित्वेन श्री सेवा राम शर्मा प्राह यत् जाति व्यवस्था विषये भ्रान्तीनां निराकरणं करणीयम् येन राष्ट्रे समाजे च जनहितं भवेत् ।

मुख्यातिथित्वेन दिल्ली प्रशासनस्य माननीय उपराज्यपाल: श्री पी०के० दवे महोदय: परिसंवाद विषयं प्रशंसमान: संस्कृत अकादमीं प्राशंसत । संस्कृतभाषां राष्ट्रीयां भाषां प्रतिपादयन् उपराज्यपाल महोदय भारतीयायां संस्कृतौ "अनेकतायां एकता" इत्यस्य वैशिष्ट्यं प्राभाषत ।

परिसंवादस्य प्रारम्भ: वैदिक मंगला चरणेन, "श्रीदवे" द्वारा दीप प्रज्जालनेन च अभवत् । अत्र श्रोतृणां बाहुल्ये अपि मञ्च सञ्चालक श्री सेमवाल कौशलेन श्लाघनीया व्यवस्थां आसीत् ॥

4—संस्कृतसंगोष्ठी—

—22-7-92 दिने "अकादमी" स्थानीये: फिक्की सभागारे "संस्कृतेन पञ्जाबी भाषाया अनन्त सम्बन्ध:" इति विषय मवलम्ब्य "संगोष्ठीम्" समायोजयत् । जन संकुले अस्मिन् समारोहे—डा० सत्येन्द्र सिंह नूर: महोदय: (पञ्जाबी विभागाध्यक्ष, दि०वि०वि०) अध्यक्षतां कृतवान् । संगोष्ठ्यां दिल्ली- इतर-प्रदेशेभ्य: अपि समागत्य भाषाद्वयस्य लेखका:, आलोचका:, पत्रकारा:, चिन्तका:, भाषाविशेषज्ञा: विद्वांस: भागं गृहीतवन्त: । दिल्ली प्रशासनस्य वित्तायुक्त: श्री सेवाराम शर्मा मुख्यतिथित्वेन व्यराजत ।

अध्यक्षत्वेन श्री नूर महोदय: प्राबोधयत् यत् पंजाबी धर्म साहित्यस्य—"गुरु वाणीनां" सम्यग् ज्ञानाय वेदानां ज्ञानम् आवश्यकं सहायकं च अस्ति ।

डॉ० जोधसिंह: (पंजाबी वि० वि० पटियाला) प्राह यत् साहित्यस्य भाषाया: च हित दृष्ट्या नवमी शताब्दी दशमी चापि महत्त्वपूर्णा विद्यते । तत् कालीन संस्कृत साहित्यस्य कथानकानां प्रभाव: पर वर्तिनि सर्वभाषा-साहित्ये सुस्पष्टोऽस्ति ।

डॉ० बलवन्त सिंह रामूवालिया (अल्प संख्यक-आयोग-अध्यक्ष:) कथितवान् यत् भाषाणां सम्बन्ध: धर्म विशेषेण वर्ग विशेषेण वा कदापि नास्ति । भाषा: लोकान् योजयन्ति न तु वियोजयन्ति ।

डॉ० लेख राज: (वि० वि० अमृतसर) संस्कृत पंजाबी साहित्ययो: सामञ्जस्यं सम्यक् प्रति पादित वान् । डॉ० जगजीत सिंह खोखर:(नाभा) पजाबी केवलं सिक्खानां भाषा नास्ति, एषा हिन्दूनां मुस्लिमानां अपि भाषाऽस्ति । संस्कृतं चापि सर्वेषां वर्गाणां कृते वर्तते । अत्रावसरे डॉ० महीप सिंह:, श्री प्रेम भूषण गोयल: डॉ० प्रेम प्रकाश सिंह: डॉ० सत्यपाल नारंग:, प्रभाकर रामरत्न शास्त्री (संस्कृत-पत्रकार:) श्रीमती हरपाल कौर, श्री एम० एस बत्रा (सचिव-पंजाबी अकादमी) प्रभृतय: अधिकारिणो विद्वांस: पंजाबी संस्कृतयो:पारस्परिकमनन्त सम्बन्धं प्रतिपादित वन्त: । मंच अकादमी सचिव:श्री श्री कृष्ण सेमवाल : सञ्चालित वान् ॥

५—संस्कृत गोष्ठी

18-7-92 दिने दिल्ली स्थ संस्कृत संस्था "मन्दाकिनी" पक्षत: स्थानीये दीवान हाल-समागारे संस्कृत गोष्ठी सभायोजिता अभवत् । अत्र ला० बहा० शा० सं० वि० पीठस्य कुलधिपति: अध्यक्षतां कृतवान् । प्राध्यापक: डॉ० राम देव झा 'भारतीय काल गणना पद्धति-विषये- स्व लेखं पठितवान् । सतर्कं सोदाहरणं च विषयं स्पष्टी चकार । अत्र डॉ० रामकरण शर्मा श्री नागेन्द्र झा प्रभृतय: विद्वांस: निजनिजान् विचारान् प्रकटितवन्त: ॥

## (६) पुरस्कार वितरण समारोह

22-7-92 दिल्ली प्रशासन के प्रशिक्षण एवं तकनीकी शिक्षा निदेशक, श्री के. बी. शुक्ला ने आई. टी. आई. पूसा में आयोजित पुरस्कार वितरण समारोह में अन्तर औद्योगिक प्रशिक्षण संस्थान सांस्कृतिक प्रतियोगिता में भाग ले रहे प्रतियोगियों को उनकी प्रतिभा व उत्कृष्टता के लिये स्मृति चिन्ह व प्रशस्ति पत्र भेंट किये । प्रतियोगिता में 350 से अधिक खिलाड़ियों ने भाग लिया ।

श्री शुक्ला ने छात्रों को समय की चुनौतियों का सामना करने के लिये उत्तम शिक्षा ग्रहण करने के साथ-साथ खेल सांस्कृतिक क्रिया कलापों में, भी भाग लेने की प्रेरणा दी ।

सूचना एवं प्रचार निदेशालय
दिल्ली प्रशासन: दिल्ली

## वेदो नित्यमधीयतां तदुदितं कर्म अनुष्ठीयताम्

इतिशास्त्र वचनानुसारं सर्वैरेव मनुष्यैः नित्यं वेदानामध्ययनं कर्त्तव्यमित्यभिलक्ष्य सार्वदेशिक आर्यप्रतिनिधि-सभा हिन्दीभाषायां वेदानामनुवादं सुलभमकरोत्। एषां विक्रयणे नास्ति कश्चिदार्थिकलाभः। सर्वे वेदानां स्वाध्यायं कुर्युरित्येव लाभो महान्।

## सार्वदेशिक आर्य प्रतिनिधि-सभा द्वारा प्रकाशितम्

| वैदिक-साहित्यम् | | नवीन-प्रकाशनम् | |
|---|---|---|---|
| | | वीर वैरागी | ४/- |
| १. ऋग्वेदादिभाष्य भूमिका | २८/- | वेददर्शन | ५/- |
| २. आत्मदर्शन (नवीन संस्करण) | | श्रीमद्दयानन्द प्रकाश | ३०/- |
| महात्मा नारायण स्वामीकृत | १०/- | Bankim, Tilak, Daya Anand | २/५० |
| ३. दयानन्द-दिव्य दर्शन (चित्रावली) | २५/- | वैदिक युग और आदिमानव | १२/- |
| ४. कर्त्तव्यदर्पण | ६/- | (आचार्य वैद्यनाथ शास्त्री) | |
| ५. आर्य पर्व-पद्धति | १०/- | सत्यार्थ प्रकाश (हिन्दी) | २०/- |
| ६. ऋग्वेदः (पंचभागात्मकः सम्पूर्णः) | ३००/- | संघर्ष ही जीवन है | ३/५० |
| ७. यजुर्वेदः एकः आबन्धः " | ६०/- | गौहत्या-राष्ट्र-हत्या | २/- |
| ८. सामवेदः " " " | ७०/- | उपनिषद् आठ | २५/- |
| ९. अथर्ववेदः (द्विभागात्मकः) | १५०/- | दयानन्द वचनामृत | २/५० |
| १०. Introduction to the Vedas | ३०/- | अमर हुतात्मा पं० लेखराम | २/५० |
| ११. Atharva Ved (Eng I part) | ६५/- | वैदिक सूक्ति-सुधा | १/५० |
| १२. Atbarva Ved (Eng. II Part) (Acharaya Vaid Nath Shastri) | ६५/- | योग रहस्य | ८/- |
| | | मृत्यु और परलोक | ८/- |
| १३. Rigved I, II Each/- | ४०/- | संस्कार विधि | १८/- |
| III | ६५/- | वेदार्थ कल्पद्रुमः (आचार्य विशुद्धानन्द) | ६०/- |
| १४. ऋग्वेद iv (इंग्लि०) | ६५/- | महर्षि दयानन्द और विवेकानन्द | १२/- |
| १५. सामवेद v.i (इंग्लि०) | ७०/- | संस्कृत सत्यार्थ प्रकाशः | ५०/- |
| १६. Spot Light on truth | १००/- | सत्यार्थ प्रकाश (उर्दू) | २५/- |

(चारों वेद—नौ जिल्दों में सरल हिन्दी अनुवाद सहित एक साथ लेने पर ६००) रुपये के स्थान पर केवल ५२५ रुपये में।

अलग-अलग जिल्द लेने पर १० प्रतिशत कमीशन दिया जायेगा।

**मन्त्री, सार्वदेशिक आर्य प्रतिनिधि सभा,**

**दयानन्द भवन, ३/५ आसफअली रोड, नई दिल्ली-२**

आर. न. 39380/78 बिना टिकट भेजने का लाइसेंस नं० यू (U) 35 (डी०-एल् 12023/92)

सेवायाम्

श्रीयुत...... वी.वी. रामा परिञ्जा
मन्त्री गीर्वाण भाषाभिवर्धिनी सभा
...... राजा स्ट्रीट संस्कृत कला शाला
...... मेले कोटे पिन (571431)
जिला माण्डया कर्णाटक

..........................................

**संस्कृतामृतम्**

पञ्जीकरण सं० एस० ४००

प्रेरकः-नेपाल राजगुरुः योगी श्री नरहरिनाथः शास्त्री

१. संरक्षकः-ऋषि कल्पः पं० श्री विश्वनाथ प्रभाकरः शास्त्री संचालक-श्री सरस्वती संस्कृत महाविद्यालयः खन्ना (पं.

२. मान्यः स्वामी आनन्द बोध सरस्वती प्रधान-सार्वदेशिक आर्य प्रतिनिधि सभा दिल्ली।

सहायक सम्पादक मण्डलम्—

१. श्री प्रकाशचन्द्रः शास्त्री विद्यालंकार

२. श्री सुधीर कुमार शर्मा, बी० काम्

प्रकाशन-कार्यालय—

१४१८, बाजार गुलियान, दिल्ली-११०००६

## संस्कृतं सेवामहे

मान्याः संस्कृत विद्वांसः

यतो हि संस्कृतज्ञा एव संस्कृतपत्रपत्रिकाणामाधार भूता इत्यस्मात् संस्कृतभाषामुखेन वैदिकी संस्कृति-सेवा राष्ट्रगौरव-वृद्धिश्च मुख्योद्देश्यमस्य संस्कृतामृतस्येति विदितार्थैः भवद्भिः ममता पूर्वकमादौलेख-प्रेषकैः-भाव्यम् ततः पाठकैः भव्यम्, ततो ग्राहकैः भाव्यम्। सर्वदा सर्वथा संरक्षकैः संवर्धकैश्च भवद्भिः 'संस्कृतामृतम्-इत्यस्य पत्रस्य प्रकाशनेऽस्मिन् राष्ट्रिये च कर्मणि प्रोत्साहकैः भाव्यम् इति।

इदं हि पुण्यदायकं सारस्वतं यज्ञं अनवरतं प्रचरेत् इत्यर्थे आवश्यकं यद् यज्ञेऽस्मिन् सर्वेऽपि संस्कृतामृत-पाठकाः निम्नलिखित रूपेण आहुतिं प्रदद्युः यथा—

१—स्वेच्छया आर्थिक सहायता प्रदान रूपेण।

२—वार्षिक-शुल्क 20) रूप्यकप्रेषण रूपेण।

३—प्रकाशन-योग्यानां लेखादिकानां प्रेषण रूपेण।

४—अनुरूपाणां विज्ञापनानां प्रकाशन रूपेण।

५—परिचितानां संस्कृतानुरागि-पाठकानांगृह-संकेत- --प्रेषण रूपेण

## संस्कृतामृतस्योद्देश्यानि

(क) प्राचीनार्वाचीन-संस्कृतार्षविद्यानां सच्चरितानाञ्च विश्वव्यापी प्रचारः।

(ख) दुर्व्यसन-परित्याग-प्रेरणा-पुरस्सरं विश्वकल्याण-कारिणीं भारतीय संस्कृतिं प्रति जनताऽभिरुचि-जागरणम्।

(ग) संस्कृत-संस्कृतिसेवायामर्पित-जीवनानां विदुषामभि-नन्दनम्।

(घ) रुचि-कराणामभिनवानां ग्रन्थानां प्रकाशनम्।

(ङ) सुरभारत्याः संस्कृतभाषायाः सरलीकरणम्।

**प्रकाशन नियमाः—**

(क) संस्कृतामृतं प्रतिमासं पंचदशे दिने प्रकाश्यते।

(ख) उद्देश्यानुकूलाः सुवाच्याः लेखाः प्रकाश्यन्ते।

(ग) लेखानां परिवर्तने सम्पादकमण्डलम् साधिकारम्।

(घ) उद्देश्यानुरूपाणि एव विज्ञापनानि प्रकाश्यन्ते।

(ङ) पुस्तकादीनां समालोचनार्थं प्रतिद्वयं प्रेष्यम्।

(च) पत्रं न लब्धं चेद् द्वादशदिनाभ्यन्तरे सूचना देया, प्रेष्यते।

(छ) वार्षिकं शुल्कं विंशतिः २०) रूप्यकाणि।

—सम्पादक मण्डलम्

मुद्रक—ब्रह्मा प्रिंटिंग प्रेस, 1232, चौक शाह मुबारिक बाजार सीताराम, दिल्ली-6 द्वारा प्रभाकर रामरत्न, शास्त्री ने प्रकाशन कार्यालय से प्रकाशित किया।